# गणपतिस्तोत्रम्

सुवर्णवर्णसुन्दरं सितैकदन्तबन्धुरं
गृहीतपाशकाङ्कुशं वरप्रदाभयप्रदम् ।
चतुर्भुजं त्रिलोचनं भुजङ्गमोपवीतिनं
प्रफुल्लवारिजासनं भजामि सिन्धुराननम् ॥ १॥

किरीटहारकुण्डलं प्रदीप्तबाहुभूषणं
प्रचण्डरत्नकङ्कणं प्रशोभिताङ्घ्रियष्टिकम् ।
प्रभातसूर्यसुन्दराम्बरद्वयप्रधारिणं
सरत्नहेमनूपुरं प्रशोभिताङ्घ्रिपङ्कजम् ॥ २॥
सुवर्णदण्डमण्डितप्रचण्डचारुचामरं
गृहप्रतीर्णसुन्दरं युगक्षणं प्रमोदितम् ।
कवीन्द्रचित्तरञ्जकं महाविपत्तिभञ्जकं
षडक्षरस्वरूपिणं भजेद्गजेन्द्ररूपिणम् ॥ ३॥

विरिञ्चिविष्णुवन्दितं विरूपलोचनस्तुतिं
गिरीशदर्शनेच्छया समर्पितं पराशया ।
निरन्तरं सुरासुरैः सपुत्रवामलोचनैः
महामखेष्टमिष्टकर्मसु (स्मृतं) भजामि तुन्दिलम् ॥ ४॥

मदौघलुब्धचञ्चलार्कमञ्जुगुञ्जितारवं
प्रबुद्धचित्तरञ्जकं प्रमोदकर्णचालकम् ।
अनन्यभक्तिमानवं प्रचण्डमुक्तिदायकं
नमामि नित्यमादरेण वक्रतुण्डनायकम् ॥ ५॥

दारिद्र्यविद्रावणमाशु कामदं स्तोत्रं पठेदेतदजस्रमादरात् ।
पुत्रीकलत्रस्वजनेषु मैत्री पुमान्भवेदेकवरप्रसादात् ॥६॥

इति श्रीमच्छङ्कराचार्यविरचितं गणपतिस्तोत्रं सम्पूर्णम् ।

# संकष्टनाशनं गणेशस्तोत्रम्

प्रणम्य शिरसा देवं गौरीपुत्रं विनायकम्
भक्तावासं स्मरेन्नित्यमायुःकामार्थसिद्धये १

प्रथमं वक्रतुण्डं च एकदन्तं द्वितीयकम्
तृतीयं कृष्णपिंगाक्षं गजवक्त्रं चतुर्थकम् २

लंबोदरं पंचमं च षष्ठं विकटमेव च
सप्तमं विघ्नराजं च धूम्रवर्णं तथाऽष्टमम् ३

नवमं भालचंद्रं च दशमं तु विनायकम्
एकादशं गणपतिं द्वादशं तु गजाननम् ४

द्वादशैतानि नामानि त्रिसंध्यं यः पठेन्नरः
न च विघ्नभयं तस्य सर्वसिद्धिकरं परम् ५

विद्यार्थी लभते विद्यां धनार्थी लभते धनम्
पुत्रार्थी लभते पुत्रान्मोक्षार्थी लभते गतिम् ६

जपेद्गणपतिस्तोत्रं षड्भिर्मासैः फलं लभेत्
संवत्सरेण सिद्धिं च लभते नात्र संशयः ७

अष्टभ्यो ब्राह्मणेभ्यश्च लिखित्वा यः समर्पयेत्
तस्य विद्या भवेत्सर्वा गणेशस्य प्रसादतः ८

इति श्रीनारदपुराणे संकष्टनाशनं गणेशस्तोत्रं सम्पूर्णम् ९

Reference:
Narayana Rama Acharya, ed., *Brihat-Stotra-Ratnakarah*, Part I, (Varanasi: Chaukhambha Orientalia, 1997), p. 28.